कारणासत्त्वशङ्कानुदयादिति चेत् । न । वाक्यशेषेण निर्णयस्य सिद्धान्तयुक्तितया तद्विरोधेन पूर्वपक्षानुत्थितत्याभिधानस्य त्वद्विषयकमहामोहप्रसादैकफलत्वात् । 'तदसत्सृष्टेः प्राक्काले वर्तमानं मनः सद्भावाकुरुत ' इति योजनामाश्रित्य पूर्वपक्षप्रवृत्तिसंभवाच्च ॥ १७ ॥

युक्तेः शब्दान्तराच्च ॥ १८ ॥

यद्यप्यत्र शब्दान्तरस्य सदेवेत्यादेरेव भाष्य उदाहृतत्वात् 'सत्त्वाच्चावरस्य ' इत्यनेनास्य पौनरुक्त्यमिवाऽऽभाति तथाऽप्यव्यवहितपूर्वसूत्रे पूर्वपक्षिणा तस्यान्यथा व्याख्यातत्वात्तदुपेक्षायां तादृशवाक्यार्थेऽपि किंचिद्बाधकं नास्तीति भ्रमः स्यात्तद्वारणाय पुनरुक्तिः । तथा चोक्तरीत्याऽसद्वेत्यादिवाक्यतात्पर्ये वर्णिते नोक्तं श्रुतिव्याख्यानमुचितम् । तथा सतीदमादिपदवैयर्थ्यापत्तेर्निरर्थकलक्षणादिस्वीकारापत्तेश्चेति पूर्वोक्तश्रुत्या तत्सिद्धिरनपवादेति फलिष्यति । अन्यथा युक्तिशब्देन पूर्वापरसर्वयुक्तीनामारम्भणशब्दादीत्यत्राऽऽदिशब्देन वा सर्वयुक्तिग्रहणसंभवादेतत्सूत्रसार्थक्यं तदाऽपि दुरुपपादं स्यादेवेति ॥ १८ ॥

पटवच्च ॥ १९ ॥

यथा च प्राणादि ॥ २० ॥

अत्र च 'कार्यं कारणाद्भिद्यते तस्मिन्निश्रीयमानेऽपि संदिग्धत्वात्ततोऽधिकपरिमाणत्वान्मशकादिव शशकः ' इत्यनुमाने व्यभिचारप्रदर्शनायाऽऽद्यम् । तत्रैव विलक्षणकारित्वहेतोर्व्यभिचारप्रदर्शनाय द्वितीयमिति दृष्टान्तद्वयोपदर्शनफलं संप्रदायविद्भिरुक्तम् । दृष्टान्ते सर्वसाम्यानपेक्षणाच्च ' संवेष्टितपटप्राणदृष्टान्तो न विवर्तवादिनामनुगुणो, जगतो ब्रह्मणीव प्रसारणादेः पटादावनध्यस्तत्वात्संवेष्टितप्रसारितपटादाविव निरवयवे ब्रह्मणि संकोचविकासयोरसंभवाच्चेति दूषणमनवकाशम् ॥

मीमांसान्यायपञ्चास्यराघवाचार्यसूरिणाम् ।
शिष्यस्य शांकरे पादभूषणे परदूषणे ॥
कृतिर्वितनुतां मोदमस्मिन्नयविवेचने ॥

श्रीमच्छंकररूपशंकरमहाचार्यैर्विचार्याऽऽहितं
यच्छारीरकभाष्यमार्यविनुतं दोषोज्झितं तत्र यैः ।
दोषा ये प्रतिपादिताः परिहृता निःशेषतस्ते मया
तेषामेव च दूषिताः प्रतिपदं दुर्योजनायुक्तिभिः ॥
शारीरकस्थप्रथमद्वितीयाध्यायाद्यपादद्वयभूषणावहः ।
ग्रन्थोऽयमन्वर्थकनामधेयः समापितः शंकरपादभूषणः ॥
येषां शंकरसंज्ञपूर्वजवरैरोजःप्रसिद्धैः पुरा
लब्धा लोकमनोज्ञपन्तसचिवाभिख्या भृशं श्रेयसी ।
नीरातीरसमीपभोगनगरं यद्वासभूः संततं
श्रीकृष्णार्चनतत्परा रघुवरोत्साहेऽपि दत्ताश्रयाः ॥
नानासाहेबनाम्ना ये प्रसिद्धास्तु तदाश्रयात् ।
सिद्धिं गतश्च ग्रन्थोऽयमङ्कितश्च शिलाक्षरैः ॥
तस्माड्विवाकश्च भिडेउपाह्वो मद्ग्रन्थसिद्धौ परमाश्रयो यः ।
गोपालसूनुः स च विष्णुनामा जीयाच्चिरं शैवजनप्रवीणः ॥

इत्यारम्भणाधिकरणं समाप्तम् ॥

---

समाप्तोऽयं शांकरपादभूषणाभिधो ग्रन्थः ॥

# शांकरपादभूषणस्थश्रुत्यादिवचसामकारादिवर्णानुक्रमेण सूचीपत्रम् ।

ब.

## अथ शाङ्करपादभूषणान्तर्गतानां ब्रह्मसूत्राणामकारादि-वर्णानुक्रमेण सूचीपत्रम् ।